सखीवृताम्। विस्मितो मित्रमप्राक्षीत्, किं सेयमृषभात्मजा?॥ ९॥ सोऽवक् सेयं परं मुक्ति–श्रीरिवाप्या वरार्हतैः। ततस्तल्लिप्सया चक्रे, स गुरूपास्तिमन्वहम् ॥ १० ॥ छद्मना श्रावकीभूतः, सप्तक्षेत्र्यां धनं बहु। दत्ते तल्लीलया बद्धो, रागान्धः कुरुते न किम्?॥ ११॥ ततस्तद्वीक्ष्य सद्वृत्तं, ऋषभोऽतीव रञ्जितः। स्वयमेव ददौ कन्यां, सोत्साहः पर्यणाययत्॥ १२॥ रुद्रदत्तोऽस्ति भुञ्जानः, सुखं यावत्तया समम्। तावत्तत्रागमल्लेख–स्तमाकारयितुं पितुः ॥ १३ ॥ विज्ञाय तस्य भावार्थ–मापृच्छ्य श्वशुरं ततः। अन्वितः प्रियया कूप–चन्द्रद्रङ्गं जगाम सः॥ १४ ॥ अथ तत्र सुखं सोऽस्थात्, पित्राद्यैरभिनन्दितः। शाठ्यादात्तं पुनर्धर्मं, स्तोकस्तोकेन मुक्तवान् ॥ १५ ॥ ऋषिदत्ताऽपि मिथ्यादृग्, मिथ्यादृक्संस्तवादभूत्। स्वर्णमप्यग्निसंसर्गा--दग्निवज्जायते न किम्?॥ १६॥ तस्याः पितृभ्यां तज्ज्ञात्वा, संदेशाद्यपि वर्जितम्। जातं पारमिवाम्भोधेर्मितमप्यन्तरं मिथः॥ १७ ॥ तयोर्विषयसौख्यानि, स्वेच्छया सेवमानयोः। ऋषिदत्ताऽन्यदाऽसूत, सुतं श्रीरिव मन्मथम्॥१८॥ स महेश्वरदत्ताख्यो, ववृधे नव्यचन्द्रवत्। क्रमात् कलाब्धिपारीणः, स प्राप्तो नवयौवनम् ॥१९॥ इतश्च वर्द्धमानाख्ये, पुरे तस्याऽस्ति मातुलः। सहदेवाभिधस्तस्य,

श्रीहंसविजयजी जैन लायब्रेरी ग्रन्थमाला नं. ९.

शीलमाहात्म्योपरि–

# ॥ श्रीनर्मदासुन्दरीकथा ॥



प्रकाशकः–हंसवन्निर्मल-मुनिराजश्रीहंसविजयशिष्यरत्न–पन्न्यासश्रीसंपतविजयोपदेशेन–रतलामवास्तव्यश्रीसङ्घार्पितद्रव्य-साहाय्येन शा. जेशंगभाइ छोटालाल सुतरीया, सेक्रेटरी–श्रीहंसविजयजी जैन लायब्रेरी–अमदावाद.

अमदावाद–घीकांटावाडीमां आवेला श्री " जैन एडवोकेट " प्रीं. प्रेसमां शा. चीमनलाल गोकलदासे छापी.

श्रीवीरनिर्वाणात् २४४५.   ई० सन १९१९.   विक्रमार्क १९७५.

प्रथमावृत्ति.   प्रति ५००.

भूयात्प्रियवियोगभाक् ॥ ५४ ॥ विष्वग्भल्लीप्रहाराभं, तदाकर्ण्य मुनेर्वचः। कम्पमानाऽतिवृद्धेव, नर्मदासुन्दरी ततः ॥५५॥ गवाक्षाद् द्रुतमुत्तीर्य, निन्दन्ती स्वमनेकधा। मुनिं निर्माज्य वस्त्रेण, न्यपतत् पदपद्मयोः ॥५६॥ विनयेनातिदैन्येन, क्षमयित्वा तमब्रवीत्। जगदानन्द! संसार-सौख्यं मैवं मम च्छिदः ॥५७॥ हा हा! धिग्! धिगनार्यां मां, या कृत्वैवंविधां क्रियाम्। दुःखाब्धौ दुःसहे रौद्रे, प्रमादेन स्वमक्षिपम् ॥५८॥ अद्यैव सर्वसौख्यानि, प्रणश्यन्ति स्म मे प्रभो!। अद्यैव चास्मि सञ्जाता, पापिष्ठेभ्योऽपि पापिनी ॥५९॥ भवन्ति सदयाः स्वामिन्!, दुःखितेषु महर्षयः। तत्कारुण्यसुधाम्भोधे!, मम शापमपाकुरु ॥६०॥ बहुधा विलपन्त्येवं, विभाव्य श्रुतसंविदा। अभाणि मुनिना भद्रे!, विलापीर्मा सुदुःखिता ॥ ६१ ॥ कोपावेशवशाद्दत्तः, शापस्तव मया शुभे!। शान्तः सम्प्रति कोपाग्नि-र्मम त्वद्विनयाम्भसा ॥ ६२ ॥ अनाभोगादपि मया, दत्तो भाव्येव यत्तव। विपाकः कर्मणां भद्रे!, भवान्तरनिकाचितः ॥ ६३ ॥ त्वयाऽनुभाव्यं तद्दुःखं, चिरं प्रियवियोगजम्। स्वकृतैः कर्मभिः कोऽपि, नाभुक्तैर्यद् विमुच्यते ॥ ६४ ॥ हसद्भिर्बध्यते नूनं, पापकर्म यदङ्गिभिः। निस्तीर्यते रुदद्भिस्त-न्निश्चयोऽत्र न

## ❦ बे बोल. ❦

महासती नर्मदासुंदरी के जे प्राणांत कष्टो पडवा छतां पोताना शियळथी डगी नथी, आवी महापवित्र सतीना निर्दोष चरित्रथी गुंथायेली आ कथानुं मनन करवाथी खरेखर आत्मार्थी प्राणीओनो आत्मा निर्मल थायछे. आ कथा नानकडी होवा छतां तेनी अंदरना रहस्यने शांत चित्ते जो मनुष्य पोताना हृदयमां उतारे तो तेने अवश्य आ भयंकर संसार समुद्र तरवो सहेल थइ पडे तेमां संशय नथी.

प्रातः स्मरणीय मुनिमहाराज श्रीहंसविजयजी महाराजजीए संवत् १९७० मां रतलामनी अंदर चतुर्मास कर्युं हतु. ते वखते तेओश्रीना शिष्यरत्न पन्न्यासजी श्रीसंपतविजयजी महाराजे उपधानतप कराव्यो हतो. ते प्रसंगे ज्ञानपूजादिना उत्पन्न थयेला रूपिया श्रावक पासे एकत्र थयेल, ते पैकी १०३ रूपियानी सहायथी आ ग्रन्थ छपाव्यो छे. अमो श्रीरतलामना श्रीसंघनो आभार मानी धन्यवाद आपवापूर्वक आवा अपूर्व उपकारक जैन ग्रन्थो बहार पाडवा अन्य जैन गृहस्थोनुं ध्यान खेंचीए छीए.

अमदावाद,
ता. १-१०-१९.

ली. संघसेवक—
शा. जेशंगलाल छोटालाल.
सेक्रेटरी श्रीहंसविजयजी जैन लायब्रेरी.

ष्टेन भोजितः । शोकाऽपनोदकैर्वाक्यै–र्विशोकस्तैः कृतः क्षणात् ॥ ९९ ॥ प्राप्तोऽथ यवनद्वीपे, सर्वे-
षामपि तत्र च। अभूद्वाञ्छाऽतिगो लाभः, सर्वे मुमुदिरे ततः ॥ १०० ॥ गृहीत्वा प्रतिपण्यानि, तथैवा-
यान्निजं पुरम् । अथाख्यन्नर्मदाजानि–र्मातापित्रोरिदं रुदन् ॥ १०१ ॥ स्नुषां वो राक्षसद्वीपे, भक्षया-
मास राक्षसः । दुःखार्त्तास्तेऽपि तत्कृत्य–मथ चक्रुः स्थितिर्ह्यसौ ॥ १०२ ॥ ततः स कन्यकामन्यां, सु-
रूपां परिणायितः । तया सह दृढप्रेमा, भुङ्क्ते भोगांस्तथैव सः ॥ १०३ ॥ इतश्च नर्मदा तत्र, क्षणा-
र्धादुत्थिता सती । अपश्यन्ती निजं कान्तं, मनस्येवं व्यचिन्तयत् ॥ १०४ ॥ निश्चितं परिहासेन, नि-
लीनः क्वापि मे प्रियः । मुहुः शब्दायते स्माऽथ, कान्त! मे देहि दर्शनम् ॥ १०५ ॥ पर्याप्तं परिहा-
सेन, कान्तोत्ताम्यति मे मनः । कान्ते तथाऽप्यनायाति, साशङ्कोत्थाय सत्वरम् ॥ १०६ ॥ सर्वत्रान्वे-
षयामास, सरोवरवनादिषु । तत्राप्यप्रेक्षमाणा तं, पुनः शब्दानिति व्यधात् ॥ १०७ ॥ हा ! हा !
नाथ ! विनाथां मां, मुक्त्वैवं क्वापि यातवान् । प्रति प्रतिरवं चाऽथ, मुग्धत्वाद्धावति स्म सा ॥१०८॥
कण्टकोद्भिद्यमानांह्रि–क्षरद्रक्तारुणावनिः । भ्रामं भ्रामं निकुञ्जेषु, पुनरागाल्लतागृहे ॥ १०९ ॥ विलो-

॥ ॐ नमोऽर्हद्भ्यः ॥

# ॥ अथ श्रीनर्मदासुन्दरीचरित्रम् ॥

अत्रैवास्ति सुविस्तीर्णे, जम्बूद्वीपस्य भारते । वर्द्धमानं गुणैः पौरै–र्वर्द्धमानाभिधं पुरम् ॥ १ ॥ वतंसो मौर्यवंशस्य, कुणालक्षितिपालसूः । त्रिखण्डभरतस्वामी, सम्प्रतिस्तत्र भूपतिः ॥ २ ॥ तस्मिन् ऋषभसेनाख्यः, सार्थवाहो महर्द्धिकः । जिनधर्मरतो नित्य–मभूद्वीरमतीप्रियः ॥ ३ ॥ सहदेव–वीरदासौ, सुतौ तस्य बभूवतुः । ऋषिदत्ता च दुहिता, सर्वश्रीगुणसेवधिः ॥ ४ ॥ वरास्तदर्थमाजग्मु–राकृष्टा इव तद्गुणैः । परं मिथ्यादृशां तेषां, नाढ्यानामप्यदात् पिता ॥ ५ ॥ भविष्यत्यत्र यः कश्चिद्, जिनधर्मैकनिश्चलः । दरिद्रोऽपि कुरूपोऽपि, देया तस्यैव खल्वसौ ॥ ६ ॥ इमं चाकर्ण्य वृत्तान्तं, कूपचन्द्राख्यपत्तनात् । आययौ रुद्रदत्ताख्यस्तदर्थी तत्र सार्थपः ॥ ७ ॥ सख्युः कुबेरदत्तस्य, सौधे भाण्डं निधाय सः । तस्याग्रतो निविष्टोऽस्ति, यावत् पश्यन् पुरश्रियम् ॥ ८ ॥ तावद्वीक्ष्य पथे यान्ती–मृषिदत्तां

न्यद्, येन कर्मघ्नमौषधम् ॥ १२० ॥ इति ध्यात्वा सरस्यां सा, प्रक्षाल्याऽङ्गं तथांशुके। संस्थाप्य स्था-
पनाचार्यं, व्रतं वव्रे तमार्हती ॥ १२१ ॥ प्राणवृत्तिमथाधाय, फलैर्गिरिगुहान्तरे । मृन्मयीं प्रतिमां कृ-
त्वा, भक्त्या नित्यमवन्दत ॥ १२२ ॥ पूजयामास पुष्पौघै-श्चक्रे पक्वैः फलैर्बलिम् । चञ्चदत्युच्चरोमा-
ञ्चा, स्तौति स्म कलया गिरा ॥ १२३ ॥ विचिन्तयति चैवं सा, यद्यहं पुण्ययोगतः । जलधिं लङ्घयि-
ष्यामि, ग्रहीष्यामि व्रतं ततः ॥ १२४ ॥ इत्यालोच्य तटेऽम्भोधेः, पताकोत्तम्भिता तया । भिन्नप्रवहण-
त्वस्य, या चिह्नं पोतवाहिनाम् ॥ १२५ ॥ अत्रान्तरे पितृव्योऽस्या, वीरदासः कथञ्चन । देशं बर्बरकू-
लं यां-स्तं प्रदेशमुपागमत् ॥ १२६ ॥ दृष्ट्वा चिह्नं च तत्पोता-दुत्तीर्याऽगात् पदाध्वना । नर्मदा-
सुन्दरी यत्र, स्तुवती विद्यते जिनम् ॥१२७॥ श्रुत्वा तद्ध्वनिमादध्यौ, आः! कुतो नर्मदाध्वनिः। या-
वद् दृष्टिपथं प्राप्ता, सोदस्थात्तावदुन्मुखो ॥ १२८ ॥ उपलक्ष्य पितृव्यं स्वं, कण्ठमालम्ब्य साऽरुद-
त् । सोऽपि तां प्रत्यभिज्ञाय, साश्रुनेत्रः क्षणादभूत् ॥ १२९ ॥ पप्रच्छ च कथं वत्से !, त्वमत्रैकाकिनी
वने । साऽपि तस्मै यथावृत्तं, समस्तं तदचीकथत् ॥ १३० ॥ अहो! दैवस्य योगेने-त्युक्त्या तां वाह-

वणिक्पुत्रमानय । साऽथ गत्वा पुनस्तस्या–चख्यौ स्वस्वामिनीवचः ॥ १४२ ॥ दध्यौ सोऽपि तदाकर्ण्य, किं करिष्यत्यसौ मया ? । नूनं प्रलयकालेऽपि, शीलमुज्झाम्यहं न यत् ॥ १४३ ॥ तद् यामि सुभटीभूय, कातरो हि न ढौकते। मम शीलसुवर्णस्य, भवत्वेषा कषोपलः ॥ १४४ ॥ विचिन्त्येत्यगमत्तत्र, साऽपि तं दम्भिका भृशं । चित्रैरक्षोभयद्भावैः, सोऽचलन्मेरुवन्न तु ॥ १४५ ॥ कर्णे कर्णेजपेवाऽथ, चेटी तस्यै न्यवेदयत् । इन्द्राणीव प्रियाऽस्त्यस्य, किमन्यद्देवि ! वर्ण्यते ? ॥१४६॥ सा चेत् त्वदुक्तमाधत्ते, स्याच्चेत्ते पारिपार्श्विकी । तव सौधं तदा नूनं, रत्नैर्जयति रोहणम् ॥ १४७ ॥ किं बहूक्त्या? द्वितीया स्त्री, नास्ति तस्याः सदृक् क्वचित् । हरिण्यपि तदाकर्ण्य, दध्यौ तल्लाभलालसा ॥ १४८ ॥ अतत्रोत्पन्नमतिः साऽपि, निश्चित्योपायमब्रवीत्। सुभगाग्रिम! नन्वेतद्, मुद्रारत्नं तवाद्भुतम् ॥ १४९ ॥ अर्पय क्षणमेकं मे, यस्मादहमपीदृशम् । स्वयोग्यं कारयिष्यामि, ततः सोऽपि तदार्पयत् ॥ १५० ॥ चेट्याः साऽप्यथ तच्छन्न–मनुशिष्यार्पयत्करे । गत्वा चेटी ततः सद्य–स्तामूचे नर्मदामिदम् ॥ १५१ ॥ आह्वाययति भद्रे! त्वां, वीरदासः समेहि तत् । मुद्रारत्नमिदं पश्य, प्रेषितं प्रत्ययाय ते ॥ १५२ ॥ वी-

सुन्दरी प्रियवल्लभा ॥ २० ॥ संसारसुखसर्वस्वं, भुञ्जाना स्वप्रियेण सा। अन्यदाऽपन्नसत्त्वाभू-र्दभवद्दो-
हदस्ततः ॥२१॥ अथाभूत्तदसम्पत्तौ, शशिलेखेव सा कृशा। चिन्तया प्रौढशाकिन्ये-वाक्रुष्टाऽऽमिषशो-
णिता ॥२२॥ सहदेवस्तथाभूतां, दृष्ट्वाऽभाषिष्ट वल्लभाम्। प्रिये? न पूर्यते किं ते, सञ्जाताऽसि यदीदृशी ?
॥२३॥ साऽवदत्प्रिय! मे गर्भा-नुभावादस्ति दोहदः। नर्मदासलिले मंक्तुं, स्वसामग्र्या त्वया सह ॥ २४ ॥
ईदृश्यस्मि तदप्राप्त्या, नापूर्णमपरं मम। ततः स तां समाश्वास्य, तत्सामग्रीमचीकरत् ॥ २५ ॥ अथ
कृत्वा महासार्थं, वणिक्पुत्रशतान्वितः। चित्राण्यादाय पण्यानि, सुमुहूर्त्ते चचाल सः ॥ २६ ॥ जिगीषु-
नृपवद्गच्छ-न्नविश्रान्तप्रयाणकैः। सार्थमावासयत्सैन्य-मिव नार्मदरोधसि ॥ २७ ॥ नर्मदायां नर्म-
दायां, सहस्रार्जुनवत्ततः। विदधे मज्जनक्रीडां, महर्द्ध्या प्रियया सह ॥ २८ ॥ पूर्णे च दोहदे तस्या,
नर्मदापुरनामकम्। पुरं निवेश्य तत्रैवाऽकारयच्चैत्यमर्हतः॥ २९ ॥ अगच्छन् वणिजोऽनेके, तदाकर्ण्य
पुरोत्तमम्। लाभश्चाभून्महांस्तत्र, प्रख्यातिमगमत्ततः॥ ३० ॥ सहदेवप्रिया तत्र, सुखं पूर्णमनोरथा।
सुषुवे कन्यकां दिव्या-मभ्रलेखेव विद्युतम् ॥ ३१ ॥ सहदेवः सुतस्येव, तस्या जन्मोत्सवं व्यधात्।

सुखं वैषयिकं भुङ्क्ष्व, स्वैरं नवनवैर्नरैः। विभूतिश्च मदीयेयं, बाले! सर्वाऽपि तावकी ॥१६४॥ तच्छ्रुत्वा
नर्मदाऽप्यूचे, धुन्वाना करपल्लवौ। दुर्वचः कुलशीलघ्नं, कुलटे! मा स्म भाषत ॥ १६५ ॥ हरिण्या रुष्टया
साऽथ, कशाद्यैरभिताडिता । उत्फुल्लकिंशुकाभाऽभूत्, कुरुविन्दमयी तदा ॥ १६६ ॥ अथोचेऽद्यापि
किं धृष्टे!, मन्यसे नहि मद्वचः । नर्मदा स्माह ते वाचं, करिष्ये नात्र जन्मनि॥ १६७॥ ततो दुष्टा-
ऽतिरुष्टा सा, यावत्कष्टयतेऽधिकम् । तावत्पञ्चनमस्कारं, स्वं त्रातुं नर्मदाऽस्मरत् ॥ १६८॥ तत्प्रभा-
वाच्च तत्कालं, गतप्राणा हरिण्यभूत् । अदृष्टकुलिशाघातात्, प्रहतेव दुरात्मिका ॥ १६९ ॥ हरिणी-
मरणं ज्ञात्वा, राजा स्माह स्वमन्त्रिणं। सुरूपामपरां काञ्चित्, कान्तां स्थापय तत्पदे ॥ १७० ॥ रा-
जादेशादमात्योऽपि, हरिणीगृहमागतः । विलोक्य नर्मदारूप–मसरूपं विसिष्मिये ॥ १७१ ॥ अथो-
चे तां नृपादेशात्, कुर्वे त्वां हरिणीपदे । विभाव्य निर्गमोपायं, साऽपि तत्प्रत्यपद्यत ॥ १७२ ॥ स्था-
पयित्वाऽथ तां मन्त्री, तत्पदे मुदितोऽगमत्। अथ सा हरिणीद्रव्यं, दत्ते कल्पलतेव तत्॥ १७३ ॥ दा-
नशीलां सुरूपां च, विज्ञायाऽथ कथंचन । प्रैषयत्तामुपानेतुं, याप्ययानं नरांश्च राट् ॥ १७४ ॥ तां

नर्मदासुन्दरीत्याख्यां, चक्रे चानन्दतुन्दिलः ॥ ३२ ॥ सा क्रमाद्वर्धमानाऽभूत्, कलाब्धेः पारदृश्वरी ।
विशेषतश्च विज्ञात्री, बभूव स्वरमण्डले ॥३३॥ प्राप्ताऽथ यौवनं बाला, विलासकुलमन्दिरम्। रूपला-
वण्यसौभाग्यैः, ख्याता साम्प्रतमित्यतः ॥ ३४ ॥ तस्याः श्रुत्वाऽद्भुतं रूपं, ऋषिदत्ता व्यचिन्तयत् ।
भविष्यति कथं भार्या, ममासौ तनुजन्मनः ?॥ ३५ ॥ उज्झिता स्वजनैः सर्वैः, निर्भाग्याहं कथं
हहा!। त्यक्ताहं धर्मरत्नायाः, कियदेतन्ममाथवा!॥ ३६ ॥ आलापाद्यपि यैस्त्यक्तं, ते कथं तनयस्य मे।
दास्यन्ति तादृशीं कन्या-मित्यार्त्या साऽरुदद् भृशम् ॥ ३७ ॥ दृष्ट्वा तामूचिवान् भर्ता, स्वाधीनेऽपि
मयि प्रिये!। दुःखं तवास्ति किं? ब्रूहि, येन व्यपनयामि तत्॥ ३८ ॥ ततः साऽकथयत्सर्वं, तच्च श्रुत्वा
सुतोऽवदत् । तात ! प्रेषय मां तत्र, मातुः पितृगृहेऽधुना ॥ ३९ ॥ विनयादिभिराराध्य, सर्वान् स्वान्
स्वजनान् यथा । कन्यां तां परिणीयाऽहं, मातुः सन्तोषमादधे॥४०॥ समर्प्याऽनेकपण्यानि, महासार्थं
विधाय सः। जनकेन प्रेषितोऽगान्नगरं नर्मदापुरम् ॥४१॥ बहिः सार्थं निवेश्याथ, द्वितीयमिव पत्तनम्।
प्राविशत् सुप्रशस्तेऽह्नि, सौधे मातामहस्य सः ॥४२॥ दृष्ट्वा मातामहादीन् स्वान्, परितोषमयोऽभवत् ।

क्षीन्मौलौ कृताञ्जलिः । प्रभो! मे भ्रातृपुत्री किं?, चक्रे प्राक्कर्म नर्मदा ॥ २०८ ॥ येनाऽत्यद्भुतशी-
लाऽपि, दुर्दशां प्रापदीदृशीम् । गुरुरप्यादिशत्तस्य, सुधारसकिरा गिरा ॥ २०९ ॥ इहास्ति भरते भू-
भृद्, विन्ध्यो मध्यमखण्डगः। यदग्रोद्भूतशिष्योघं, चरन्त्यर्कहयाः सुखम्॥२१०॥ महानदी महावेगा,
निरगान्नर्मदा यतः । देवी च तदधिष्ठात्री, मिथ्यादृग् नर्मदाभिधा ॥ २११ ॥ साऽन्यदा नर्मदोपान्ते
स्थितं धर्मरुचिं मुनिम् । दृष्ट्वा कुधीर्धातुमिवो--पसर्गौघैरयोजयत् ॥ २१२ ॥ साधोश्च निश्चलत्वेन,
प्रशान्ता स्वं निनिन्द सा । साधुना प्रतिबोध्याथ, चक्रे सम्यक्त्वधारिणी ॥ २१३ ॥ सा च्युत्वा भ्रातृ-
पुत्री ते, नर्मदासुन्दरीत्यभूत् । गर्भस्थाऽदात् ततो मातु--र्नर्मदास्नानदोहदम् ॥ २१४ ॥ यन्मात्स-
र्यात्तदा साधुं, खलीकृत्य निकाचितम् । इयन्त्यहानि तत्कर्म, भुक्तं दुस्सहमेतया ॥ २१५ ॥ उदये क-
र्मणोऽमुष्य, गातुर्गीतस्वरादसौ। स्वरूपं पत्युराचख्यौ, जहौ सोऽप्यसतीधिया ॥ २१६ ॥ तच्चरित्रं नि-
जं श्रुत्वा, प्राग्भवं नर्मदाऽस्मरत् । ततस्तस्य गुरोः पार्श्वे, संवेगात् साऽग्रहीद् व्रतम् ॥ २१७ ॥ जज्ञे-
ऽस्याश्चावधिज्ञानं, कुर्वत्या दुश्चरं तपः । ततो योग्येति गुरुभिः, स्थापिता सा प्रवर्त्तिनी ॥ २१८ ॥ वि-

गेहागतमिति स्थित्या, तेऽपि तं सममानयन् ॥ ४३ ॥ विनयाद्यैर्वसंस्तत्र, सर्वान् रञ्जयति स्म सः। तां च प्रार्थयतेऽत्यर्थं, कन्यां ते ददते न च ॥ ४४ ॥ त्वन्मातरं पिता तेऽस्मान्, विप्रतार्य शठोऽग्रहीत् । नदृष्टप्रत्ययाः पुत्रीं, यच्छामस्ते पुनः कथम् ? ॥४५॥ जाते धर्मविचारे च, कन्यया प्रतिबोधितः। स धर्मभावितात्माथ, श्रावकः परमोऽभवत् ॥ ४६ ॥ ततो दत्ता सुता तस्मै, सोत्साहं च विवाहितः। अथ प्रीतस्तया सार्द्धं, धर्मकामावसाधयत् ॥ ४७ ॥ स्वजनानन्यदापृच्छ्य, स्वपुरेऽगात्सनर्मदः । मातापितृकृतोत्साहः, स्वगृहं प्रविवेश सः ॥४८॥ श्वश्रूं श्वशुरवर्गं च, स्वोचितप्रतिपत्तिकृत् । नर्मदा स्ववशां चक्रे, गुणैः संवननार्पितैः ॥४९॥ धार्मिक्या सहचारिण्या, धन्यं स्वं गणयंस्तया। स महेश्वरदत्तोऽपि, दृढधर्माऽन्वभूत्सुखम् ॥ ५० ॥ ऋषिदत्ताऽपि धर्मं स्व-मादत्त पुनरार्हतम्। रुद्रदत्तोऽप्यभूत्सत्य-श्रावको धार्मिकाग्रिमः ॥ ५१ ॥ अपरेद्युर्गवाक्षस्था, स्फारशृङ्गारबन्धुरा । पश्यन्ती मुखमादर्शे, यावत्तिष्ठति नर्मदा ॥५२॥ तावदागात्तले साधुः, साऽप्यवीक्ष्य प्रमादतः। ताम्बूलरसमक्षैप्सीद्, मुनिशीर्षे च सोऽपतत् ॥ ५३ ॥ कुपितोऽथ मुनिः स्माह, यस्ताम्बूलरसेन माम् । आच्छोटयति पापोऽसौ,

मा विलापीस्ततो भद्र!, त्वं मे सम्प्रति बान्धवः ॥ २३० ॥ ततस्त्वमपि भो भद्र!, शुद्धसंयमवारिणा । मलं प्रक्षाल्य पापाख्यं, निर्मलात्मा भवाद् भव ॥ २३१ ॥ स महेश्वरदत्तोऽपि, श्रुत्वा तदखिलं ततः । मौलौ कृतकरः प्रोचे, विनयेनाऽतिशायिना ॥ २३२ ॥ क्षिप्ता दुःखार्णवे घोरे, शुद्धशीलापि यन्मया । पापीयसा महाभागे!, तत् क्षमस्व क्षमस्व मे ॥ २३३ ॥ साऽवदन्मा स्म सन्तापी–र्दोषस्तेऽत्र न कोऽपि यत् । निमित्तमात्रमेवाऽभू–स्त्वं भोक्तव्ये स्वकर्मणि ॥ २३४ ॥ रौद्रदत्तिरथावादीत्, भाग्यैर्यद्येति मे गुरुः । लोकाग्रारोहसोपान–कल्पां दीक्षां तदाददे ॥ २३५ ॥ तदा च विहरंस्तत्र, सुहस्तिगुरुरागमत् । पतन्ति चिन्तिताः पाशा, भाग्यकाले यतो नृणाम् ॥ २३६ ॥ स महेश्वरदत्तोऽपि, स्वजनन्या समन्वितः । अगान्नन्तुं गुरुं सोत्कः, श्राद्धे भोक्तुमिव द्विजः ॥ २३७ ॥ पिपासुरिव पीयूषं, दरिद्र इव सेवधिम् । दिदीक्षुः सुगुरुं तं स, दृष्ट्वाऽमोदिष्ट शुद्धधीः ॥ २३८ ॥ प्रणम्योपविवेशाऽथ, गुरोरग्रे सुशिष्यवत् । श्रुतकूपनिपानाभां, व्याख्यां शुश्राव तन्मुखात् ॥ २३९ ॥ पाशिते रंगवत्तस्य, व्याख्या सा हृद्युपाविशत् । व्रतं ततः स तत्पार्श्वे, स्वजनन्या सहाऽग्रहीत् ॥ २४० ॥ ततो मातासुतौ

संशयः ॥ ६५ ॥ परमार्थं ततो ज्ञात्वा, वन्दित्वा व्यसृजन्मुनिम् । अप्राख्यन्निखिलं भर्त्तुः, रुदती तं कथाविधिम् ॥ ६६ ॥ सोऽप्यूचे तामथाश्वास्य, जनयन्त्यर्चनादिकम् । विधेर्ह्यभयशान्त्यर्थं, दयिते ! रुदितेन किम् ?॥ ६७ ॥ गुरूपदेशवत्तस्य, वचः स्वीकृत्य सापि तत् । सविशेषं रता धर्मे, भेजे वैषयिकं सुखम् ॥ ६८ ॥ एवं व्रजति काले च, सुहृद्गोष्ठीगतोऽन्यदा । नर्मदासुन्दरीजानिर्वयस्यौघैरभाष्यत ॥६९॥ विभवोपार्जनाकालो, नराणां यौवनागमः । तथापि मित्र! पित्रर्थ–भुजो ये नार्य एव ते ॥७०॥ गत्वा तद् यवनद्वीप–मुपार्ज्य विपुलं धनम् । विलसामो ननु स्वैर–मिति सोऽपि प्रयत्नवान् ॥ ७१ ॥ ततः स मातापितरौ, बोधयित्वा प्रयत्नतः । तद्द्वीपोचितभाण्डादि–सामग्रीमखिलां व्यधात् ॥ ७२ ॥ नर्मदासुन्दरीमूचे, स्थेयमत्र प्रिये ! त्वया । पारे नीराकरं येन, गन्तव्यं मे भविष्यति ॥ ७३ ॥ यतोऽस्ति सुकुमारं ते, मार्गखेदासहं वपुः । नित्यं देवगुरूपास्ति–तत्परा सुखमास्स्व तत् ॥७४॥ ततः सोवाच मा वादी–र्वचांसीदृशि वल्लभ ! । यतोऽस्मि नालंकर्मीणा, सोढुं त्वद्विरहव्यथाम् ॥ ७५ ॥ सुखाकरं कष्टमपि, व्रजन्त्या मे त्वया सह। तत्त्वामन्वागमिष्यामि, मृगाङ्कमिव कौमुदी ॥७६॥ ततस्तां

॥ ७७ ॥ गच्छतां
समुपादाय, महासार्थेन निर्गतः । गत्वोपाब्धि ससार्थोऽपि, पोतेष्वध्यारुरोह सः ॥ ७७ ॥ गच्छतां
चाम्बुधौ प्रीत्याऽनुकूलानिलयोगतः । केनापि गातुमारेभे, तत्रातिमधुरस्वरम् ॥७८॥ तच्छब्दं श्रुत्वा-
ऽपीतः, स्वरलक्षणमर्मवित् । ऊचेऽसौ गाथकः कान्त!, विद्यते शबलच्छविः ॥७९॥ तथा बर्बरकेशोऽयं,
साहसी रणदुर्जयः । उच्चवक्षःस्थलो रक्त–पाणिर्द्वात्रिंशदब्दकः ॥ ८० ॥ अस्योरौ श्यामला रेखा, गुह्ये
चास्त्यरुणो मषः । तदाकर्ण्य गतप्रेमा, दध्यौ तस्याः प्रियः क्षणात् ॥ ८१ ॥ ध्रुवं स्नेहोऽस्त्यनेनासौ,
वेत्त्येवं कथमन्यथा ?। असती तदसौ नूनं, कलङ्कितकुलद्वया ॥८२॥ हृद्यासीन् मे प्रिया जैनी, श्रावि-
काऽसौ महासती। अस्या अप्यसतीत्वेऽभू–न्निराधारं सतीव्रतम् ॥८३॥ तत्किमेनां क्षिपाम्यब्धौ?, हन्मि
क्षुरिकयाऽथवा?। मारयाम्यारटन्तीं वा, मोटयित्वा कृकाटिकाम्?॥८४॥ स एवं यावदाध्यौ, नाना-
मिथ्याविकल्पनात् । ततः कूपाग्रगस्तावदूचे पोतान्निधत्त भोः ॥ ८५ ॥ गृह्णीत राक्षसद्वीपेऽमुष्मि-
न्नीरेन्धनादिकम्। दधिरे यानपात्राणि, तेऽपि तत्रैव तद्गिरा ॥८६॥ सर्वे प्रेक्षन्ति तं द्वीपं, गृह्णन्ति स्म
जलेन्धने । स महेश्वरदत्तोऽपि, नर्मदां स्माह मायया ॥८७॥ रम्योऽयं सुन्दरि! द्वीपस्तदुत्तीर्याऽवलो-

क्यते। साऽथ हृष्टा समुत्तीर्य, तत्र पत्या सहाऽभ्रमत् ॥ ८८ ॥ वनं वनाद् भ्रमन्तौ च, ताभ्यां दृष्टं महासरः । यस्य पालीवनालीषु, जायते जलदभ्रमः ॥ ८९ ॥ स्वच्छस्वादुजलापूर्णे, पद्मिनीखण्डमण्डिते । जलकेलीं ततस्तस्मिन्नकृषातामुभावपि ॥ ९० ॥ अथ निष्क्रम्य तत्पाल्यां, विलोक्यैकं लतागृहम् । कृत्वा पल्लवपल्यङ्कं, सुप्तौ जायापती क्षणम् ॥ ९१ ॥ निद्रावशं गतायां च, नर्मदायां स तत्प्रियः । चिन्तयामास वैरीव, निर्घृणैकशिरोमणिः ॥ ९२ ॥ मुञ्चाम्येकाकिनीमत्र, म्रियतेऽसौ यथा स्वयम्। चिन्तानुरूपं कृत्वाऽथ, शनैरपससार सः ॥ ९३ ॥ वाहनोपान्तमायासीद्, रुदन्नुच्चैःस्वरं शठः । सार्थिकैश्चाकुलैः पृष्टः, किं ? किं ? रोदिषि सार्थप ! ॥ ९४ ॥ सोऽवदन् मम भार्या सा, भक्षिता राक्षसेन भोः !। अशक्तस्तां परित्रातुं, नंष्ट्वाऽऽगामत्र कातरः ॥ ९५ ॥ पूरयध्वं ततः पोतान्, माऽऽयासीदत्र राक्षसः । भयभीतास्ततस्तेऽपि, मंक्षु पोतानपूरयन् ॥ ९६ ॥ सोऽपि जग्राह नाहारं, शोकार्त इव मायया । विललाप रुरोदोच्चै–र्विलुलोठ मुमूर्च्छ च ॥ ९७ ॥ हृदि तुष्टः पुनर्दध्यौ, शुभमेतदजायत । जज्ञे लोकापवादोऽपि, यदेवं कुर्वतो न मे ॥ ९८ ॥ सार्थिकैः स प्रबोध्याऽथ, महाक-

क्याऽत्रान्तरे सूर–स्तस्यास्तां तादृशीं दशां । असमर्थः प्रतीकारे, ह्रियेवाऽस्तमुपागमत् ॥ ११० ॥ अ-
थ सा परिखिन्नाङ्गी, तस्मिन्नेव लतागृहे । रुदती बिभ्यती दीनाऽस्वपीत् पल्लवस्त्रस्तरे ॥ १११ ॥ दुः-
खितायां ततस्तस्या–मुच्छ्श्वास तमोऽधिकम् । यदि वा मलिनानां स्या–दुल्लासः सुजनापदि ॥ ११२ ॥
अथ चिन्ताभराक्रान्त–हृदस्तस्यास्तदा निशा । चतुर्यामापि दुःखार्त्या, कोटियामेव साऽभवत् ॥११३॥
अथोत्थाय पुनः प्रात–रभ्रमत्तत्र तत्र सा। दृष्टः किं? क्वापि मे भर्त्ते–त्यापृच्छन्ती मृगादिकान् ॥११४॥
हा ! दाक्षिण्यमहाम्भोधे!, हा कृपारत्नरोहण! । किं? मां स्वामिन्निहाऽत्याक्षी–रित्युच्चैर्विललाप सा
॥ ११५ ॥ एवं सा दिवसान् पञ्च, सर्वत्रापि भ्रमं भ्रमम्। अनालोक्य पतिं क्वापि, निराशाऽभूद् महा-
सती ॥ ११६ ॥ अथ षष्ठदिने शून्यं, पोतस्थानमवेत्य सा । दध्यौ त्यक्ताऽस्मि कान्तेन, स्वापराधं तु
वेद्मि न ॥ ११७ ॥ विमृश्य हन्त ! विज्ञातं, यत्कर्म प्राग् निकाचितम् । मुनिना कथितं तेन, तत्स-
म्प्रत्युदयं गतम् ॥ ११८ ॥ तत्प्रभावादरे जीव!, मिषं सङ्कल्प्य किञ्चन । त्वामत्याक्षीत् प्रियो यत्त्वं,
स्वकृतं दुष्कृतं सह ॥ ११९ ॥ मा रोदीर्मा विलापीश्च, सम्यग् भावय भावनाम् । धर्मकृत्यं विना ना-

नेऽनयत् । स्नानादिकं विधायाऽथ, मोदकादीनभोजयत् ॥ १३१ ॥ ततोऽसौ चलितोऽह्नाया–ऽभीष्टवातानुकूल्यतः । प्राप्य बर्बरकूलं त–दुत्ततार प्रमोदभाक् ॥ १३२ ॥ ताडयित्वा पटकुटीं, तन्मध्ये न्यस्य नर्मदाम् । पण्यान्युत्तार्योऽपरोधो, गृहीतोपायनो ययौ ॥ १३३ ॥ राज्ञा सत्कृतसन्मानः, स्वैरं तत्र व्यवाहरत्। स्थितः स भाण्डशालायां, पण्यौघपरिवर्तनैः ॥ १३४ ॥ अस्ति तत्र च वास्तव्या, हरिणीति पणाङ्गना । गौरवार्हा नरेन्द्रस्य, कलानां केलिलास्यभूः ॥ १३५ ॥ स्वामिनी सर्ववेश्यानां, ख्याता देशान्तरेष्वपि । निजसौन्दर्यगर्वेण, हसत्यप्सरसोऽपि या ॥ १३६ ॥ भाट्यांशं सर्ववेश्याना–मादाय स्वार्जितं च सा । दत्ते सर्वं नरेन्द्रस्य, गणिका कामशौल्किकी ॥ १३७ ॥ बाह्यपोताधिपस्तस्यै, सर्वोऽपि नृपशासनात् । अष्टाधिकां दशशतीं, दीनाराणां प्रयच्छति ॥ १३८ ॥ चेटी तत्प्रेषिताऽन्येद्युर्वीरदासमभाषत। मर्त्यलोकशची देव!, हरिणी त्वां रिरंसति ॥ १३९ ॥ सोऽवदद् यदि सा भद्रे!, शचीतोऽपि गुणाधिका । तथापि कामयेन्नाहं, स्वदारपरितोषभाक् ॥ १४० ॥ दीनाराष्टसहस्रं च, भाट्यं तद्योग्यमार्पयत् । गृहीत्वा साऽपि तत्तस्यै, ढौकयामास चेटिका ॥ १४१ ॥ साऽवदत् किं ममैतेन?, तं

रदासाभिधानाङ्कं, मुद्रारत्नं विलोक्य तत् । निर्विकल्पमतिः साऽपि, तद्गृहेऽगात्तया सह ॥ १५३ ॥
अपद्वारेण तामन्त–र्नीत्वा भूमिगृहेऽक्षिपत् । मुद्रां प्रत्यर्पयामास, वीरदासस्य तां पुनः ॥ १५४ ॥ ग-
तः सोऽपि निजे स्थाने, नर्मदामवलोकयन् । पृच्छन् परिजनं सर्वं, सर्वतोऽपि व्यलोकयत् ॥ १५५ ॥
तद्वार्त्तामप्यनाकर्ण्य, निजावासे कुतोऽपि सः । अन्यत्राऽन्वेषयामास, वनदेवकुलादिषु ॥ १५६ ॥ तत्रा-
प्यवीक्ष्य दुःखार्त्तः, स दध्यौ येन सा हृता । मयि सत्यत्र मद्भीत्या, न स प्रकटयिष्यति ॥ १५७ ॥
तदितो याम्यहं येन, स तां प्रकटयत्यथ । अतः कृत्वा स संबाहं, चचले स्वगृहान् प्रति ॥ १५८ ॥
भृगुकच्छपुरं प्राप, सांयात्रिकशताकुलम् । तत्राऽस्ति श्रावकस्तस्य, जिनदेवाभिधः सखा ॥ १५९ ॥ स
तस्याख्याय वृत्तान्त–मूचे त्वं याहि तत्र भोः! । अन्वेक्ष्य क्वापि तां बाला–मिहोपानय बान्धव ! ॥१६०॥
सोऽपि स्वीकृत्य तत् कृत्वा, सामग्रीं तत्र तत्क्षणात् । ययौ पुत्रीमिव स्वां तां, मन्वानो मित्रवत्सलः ॥
१६१ ॥ तद्वृत्तं वीरदासोऽप्य–ज्ञापयन्नर्मदापुरे । तच्छ्रुत्वा स्वजनाः सर्वे, तत्र दुःखार्णवेऽपतन् ॥ १६२ ॥
इतश्च हरिणी ज्ञात्वा, वीरदासं गतं कुधीः । नर्मदासुन्दरीमूचे, मुग्धे! वेश्यात्वमाचर ॥ १६३ ॥ सु-

तत्रारोप्य ते याव–न्नयन्त्यन्तःपुरं नराः। सा तावद् व्यमृशच्छीलं, जीवन्त्याः खण्डयते न मे ॥ १७५ ॥ रक्षोपायः परं कोऽत्रे–त्यामृशन्ती महासती। गृहश्रोतोऽतिदुर्गन्धं, वहत्पङ्किलमैक्षत ॥ १७६ ॥ ततः सा राजपुरुषान्, बभाषेऽहं तृषातुरा। मुक्त्वाऽत्र याप्ययानं त–दुपानयतु मे पयः ॥ १७७ ॥ आनयन्त्यम्बु ते यावत्, तावदुत्तीर्य यानतः। गृहश्रोतोमहापङ्के, वराहीव लुलोठ सा ॥ १७८ ॥ अहो! अमृतमित्युक्त्वा, तद् दुर्गन्धं पयः पपौ। विलोठ्य वडवेवोर्व्यां, क्रुद्धेवाऽऽक्रोशयज्जनान् ॥ १७९ ॥ अवोचच्चाऽहमिन्द्राणी, वाणी श्रीर्मां विलोकत। इत्यादि बहु शीलार्थं, ग्रहिलेव व्यचेष्टत ॥ १८० ॥ राजपुम्भिस्तदाख्यातं, सर्वं भूपस्य सोऽप्यथ। प्रेषयन्मान्त्रिकांस्तत्र, कर्तुं तद्ग्रहनिग्रहम् ॥ १८१ ॥ तानारब्धक्रियान् सद्यः, क्रोधारुणितलोचना। दर्शयन्ती ग्रहप्रौढिं, भीषयामास मान्त्रिकान् ॥ १८२ ॥ ततस्तैरपि संत्यक्ता, यथेष्टं चेष्टते स्म सा। निघ्नन्ती हन्यमाना च, लेष्ट्वाद्यैर्डिम्भकैर्वृता ॥ १८३ ॥ एवं बहिर्ग्रहात्तेव, रक्षितुं शीलमात्मनः। बभ्राम धर्ममेवैकं, ध्यायन्ती हृदये पुनः ॥ १८४ ॥ अथान्यदा वृता लोकै–र्निर्माल्यैर्मालिताङ्गिका। हल्लीसकेन नृत्यन्ती, प्रागायज्जिनरासकम्॥ १८५ ॥ तां दृष्ट्वो-

चे जिनदेवो-ऽर्हद्भक्तस्त्वं ग्रहोऽसि कः?। सोचे सागारिका अत्र, तन्नाख्यामि स्वनाम ते ॥ १८६ ॥
द्वितीयेऽथाह्नि साऽचाली-दुद्यानाभिमुखं बहिः। ववले चाथ डिंभाद्यैः, को दूरं यात्यपार्थकम्?॥१८७॥
तस्यां च धर्मानुष्ठान-तत्परायां वनान्तरे । जिनदेवोऽपि तत्रागात्, तत्स्वरूपबुभुत्सया ॥ १८८ ॥ तां
दृष्ट्वा स नमन्मौलि-रूचे वन्दे स्वसस्ततः । साऽपि तं श्रावकं ज्ञात्वा, सर्वामाख्यान्निजां कथाम्॥
१८९॥ जिनदेवोऽप्यथाचख्यौ, वीरदासः सुहृन्मम। प्रेषितस्त्वत्कृते तेन, वत्सेऽहं भृगुकच्छतः॥१९०॥
ततो मा स्म विषीदस्त्वं, प्रातर्घण्टापथस्थितम्। हविर्घटसहस्रं मे, लकुटैः कुट्टयेर्भृशम् ॥ १९१ ॥ इति
सङ्केतमाधाय, पुरे प्राविशतामुभौ। द्वितीये दिवसेऽभाङ्क्षीद्, मार्गस्था सा हविर्घटान् ॥ १७२ ॥ ततो
नृपतिराकार्य, जिनदेवमभाषत । हा! कथं महती हानि-श्चक्रे ग्रहिलयाऽनया ॥ १९३ ॥ ततोऽस्मदु-
परोधेन, क्षिपैनां परतोऽम्बुधेः। एवं येनात्र तिष्ठन्ती, नानाऽनर्थान् करिष्यति ॥ १९४ ॥ स प्रपद्य नृपा-
देशं, सत्कृतो भूभुजा बहु। दृढं निगडयित्वा तां, निनाय स्थानके निजे ॥ १९५ ॥ ततो विनिगडय्याशु,
प्रस्नाप्य परिधाप्य च। भोजयित्वाऽधिरोप्याथ, पोते भृगुपुरेऽगमत् ॥ १९६ ॥ प्रविश्य स्वगृहे सोऽथा-

ऽज्ञापयन्नर्मदापुरे। हृष्टाः सप पानेतुं, संवहन्ति स्म तेऽपि ताम् ॥१९७॥ यावच्चलन्ति ते तावत्, तां स तत्राऽनयत्पुरे। जनकादींश्च दृष्ट्वा सा, विलग्य गलकेऽरुदत् ॥ १९८ ॥ सर्वैर्ऋषभसेनाद्यै–स्तदीयैः स्वजनैस्तदा। आनन्दाश्रुभरैर्वर्षा, इव तत्रावतारिताः ॥ १९९ ॥ पृष्टायास्तैस्तदाख्यान्त्या–स्तेषां वृत्तान्तमात्मनः। शृण्वतामप्यभूद् दुःखं, तदाऽनुभवतामिव ॥ २०० ॥ जाते तत्सङ्गमे चाथ, चक्रे चैत्यार्चनोत्सवः। महादानान्यदीयन्त, सङ्घः सर्वोऽप्यपूजि च ॥ २०१ ॥ नर्मदायाः समानेता, जिनदेवाभिधः सुधीः। सर्वैः सन्मानितोऽत्यन्तं, जगाम निजपत्तनम् ॥ २०२ ॥ नर्मदासुन्दरीं प्राप्य, सर्वेषां प्रेमशालिनाम्। सुखं दिनान्यगच्छंश्च, स्वर्लोके स्वर्गिणामिव ॥ २०३ ॥ अन्यदाऽऽर्यसुहस्त्याख्याः, सूरयो दशपूर्विणः। आगमंस्तत्र सर्वज्ञ–प्रतिहस्तकताजुषः ॥ २०४ ॥ ज्ञात्वा तानागतान् सूरीन्, सर्वेऽपि वन्दितुं ययुः। तदैवर्षभसेनाद्या, नर्मदासुन्दरीयुताः ॥ २०५ ॥ वन्दित्वोपाविशन् सर्वे, नातिदूरान्तिके गुरोः। गुरुरप्यादिशद्धर्म्मं, निर्मलं मोक्षसौख्यदम् ॥ २०६ ॥ अस्मिन्नपारसंसारे, स्वकर्मफलभोगिनः। जीवाः सुखं वा दुःखं वा, प्राप्नुवन्ति पुराकृतम् ॥ २०७ ॥ वीरदासस्तदाकर्ण्या–ऽप्रा-

हरन्ती क्रमेणाऽथ, कूपचन्द्रपुरे गता । ऋषिदत्तागृहांशेऽस्थाद्, बहुसाध्वीपरिच्छदा ॥ २१९ ॥ अर्हद्धर्म्मं सदा साख्यद्, ऋषिदत्ताऽऽदृताऽश्रृणोत्। स महेश्वरदत्तोऽपि, तस्याः सूनुः समाहितः ॥ २२० ॥ सा महेश्वरदत्तस्य, प्रतिबोधकृतेऽन्यदा । स्वरमंडलशास्त्रस्य, परावर्त्तनमादधे ॥ २२१ ॥ ईदृशेन स्वरेण स्याद्, ईदृग्वर्णतनुर्नरः। एतावद्वर्षदेश्यश्च, भवत्येतादृशेन तु ॥ २२२ ॥ एवंविधेन च पुन-रियदायुर्भविष्यति । अमुदृशेन शब्देन, गुह्यदेशे मषो भवेत् ॥ २२३ ॥ ऊरुस्था लक्ष्यते रेखा-ऽमुदृशेन स्वरेण तु । इत्याद्याकर्णयन् दध्यौ, रौद्रदत्तिरिदं ततः ॥ २२४ ॥ स्वरलक्षणवेदिन्या, नूनं मद्भार्ययाऽपि हि । ऊरुरेखादिकमपि, गाथकस्य निवेदितम् ॥ २२५ ॥ ततो विलपति स्मैवं, हहाऽहमतिनिर्घृणः । अनार्यचरितः क्रूरः, पापात्मा ह्यविमर्शकृत् ॥ २२६ ॥ यत्तदा निरपराधा, दृढप्रेमाऽपि तत्र सा । ईर्ष्यालुना मयाऽत्याजि, पापेनैकाकिनी हहा ! ॥ २२७ ॥ करप्राप्तं महारत्नं, हा निर्भाग्येण हारितम् । तन्न मृत्युं विना शुद्धिः, स्त्रीहत्यापापिनो मम ॥ २२८ ॥ श्रुत्वेति विलपन्तं त-माख्याति स्म प्रवर्त्तिनी । साऽहमस्म्यत्र जीवन्ती, नर्मदासुन्दरी ननु ॥ २२९ ॥ इत्थमित्थमिहायाता, प्राप्ताऽस्मि व्रतमीदृशम्।

शीलं रत्नं हरति घनवच्छोकदारिद्र्यवार्हिं, शीलं मन्त्रं स्मरफणिविषं चौषधिवाद्धिनत्ति ॥
शीलं वज्रं खनति नगवन्मोहशत्रुं समर्थं, शीलं चक्रं चरणनगरं रक्षति क्षुद्रभीतेः ॥ १ ॥
शीलं सौभाग्यधाम प्रथलशुचियशोदिक्पथोल्लङ्घनाश्वः, स्वाहाभुक्कल्पवृक्षोपचयततिकरं सिद्धिसोपानरूपम् ॥
सच्चारित्रद्रुबीजं भवभयतटिनीभञ्जगस्त्यास्यभूतं, प्रोत्सृज्योन्मादकन्थां मणिचितवसनं स्वीकुरु ब्रह्मचर्यम् ॥ २ ॥
शिवगृहशिरोगेहारोहे वरा त्वधिरोहिणी, त्रिभुवनकृतस्थानात्मनां वशीकरणं ध्रुवम् ॥
समवसरणश्रीवासाम्भोजमात्मसरःस्थलं, दशमसुशमिश्रेयोधर्मोऽस्त्यमैथुननामकः ॥ ३ ॥
नुदति मदगदौघं राति शौर्यं त्वमोघं, गमयति च दिगन्तं स्वैरिणीं कीर्तिकान्ताम् ॥
रमयति निजलक्ष्मीं स्वाङ्गणे रागिणीं वः, प्रथयति गुणराशिं शीलमात्रं जनानाम् ॥ ४ ॥



शीले श्रीनर्मदासुन्दरीकथा सम्पूर्णा ॥

शुद्धं, श्रामण्यमनुपाल्य तौ । अभूतां स्वर्गिणौ स्वर्गे, क्रमान्मोक्षे गमिष्यतः ॥ २४१ ॥ प्रवर्तिन्यपि विज्ञाय, साऽऽयुःपर्यन्तमात्मनः । विधायानशनं जज्ञे, दिवि देवो महर्द्धिकः ॥ २४२ ॥ भूत्वाऽपरविदेहेषु, राजपुत्रो मनोरमः । तत्र न्याय्यमतिप्राज्यं, साम्राज्यमुपभुज्य च ॥ २४३ ॥ प्रव्रज्य क्षीणकर्माऽथ, प्राप्य केवलसम्पदम् । प्रबोध्य भव्यसत्त्वांश्च, सिद्धिसौधमवाप्स्यति ॥ २४४ ॥ नर्मदासुन्दरीवेह, कष्टेऽपि स्त्रीजनैस्ततः । सम्यक् शीलमनुष्ठेयं, पुंभिस्तस्याः पितृव्यवत् ॥ २४५ ॥

इति हरिपितृ'हिण्डेर्भद्रबाहुप्रणीते–र्विरचितमिह लोकश्रोत्रपात्रैकपेयम् ।
चरितममलमेतन्नर्मदासुन्दरीयं, भवतु शिवनिवासप्रापकं भक्तिभाजाम् ॥ २४६ ॥

इति शीले श्रीनर्मदासुन्दरीकथा ॥